


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः २] July, August & September 1964 [क्रमाङ्कः ८, ९, १०



विजयदशमी] शकवर्षः १८८६ [मूल्यम् ४० पैसाः

# विषयसूची







वाणीं भजत गैर्वाणीम् !



# जय जय भारत जननि !

जय जय भारत जननि ।
सुपावनि ! ॥ जय ॥
भयविरहिते ! नयपथसंचारिणि !
नियमयुते ! कृतघ्नताविरहिते ॥ ॥ जय ॥
भुवननन्दिते ! भूषितवनमालिनि !
भूधरराजराजितस्फाटिकमकुटे ! ॥ जय ॥
गंगोत्तरीयकलितगिरिवरपयोधरे !
तुंगाकृष्णागोदांचितजघनपुलिनतले ! ॥ जय ॥
कालिन्दीवेणिकाकमनीयकुन्तले !
कावेरीकांचिकांचितकटिमंडले ! ॥ जय ॥
ताम्रपर्णीसमधिगतमौक्तिकनूपुरे !
कर्मक्षेत्रभूते ! सत्कर्मपरीते ! ॥ जय ॥
वीरजननि ! शूरप्रसविनि !
पराहंकारनिवारिणि ! दुरहंकारविद्राविणि ! ॥ जय ॥

# सम्पादकीयम्

## न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति

श्रेयांसि बहुविघ्नानि इत्युक्तरीत्या उत्तमस्य कार्यस्य अन्तरायाः बहवः भवन्ति। धनलोपः, सहायलोपः, अनादरः, हेलनम्, प्रतिबन्धकल्पनम्, असूया, दुष्प्रचारः एवमादिकाः बहवः अंशाः पदे पदे स्थगयन्ति सत्कार्यम्। परन्तु एतादृशेषु अन्तरायेष्वेव सिद्धिरुत्पद्यते। अतः कार्यकर्तृभिः जागरूकैः दृढैः कर्तव्यमात्रनिष्ठैः भवितव्यम्।

बहवः संस्कृतप्रचारका निरुत्सुका भवन्ति शीघ्रफलाप्राप्त्या उद्विजन्ते च व्यासहयतां प्रति। परन्तु तैर्भगवदुक्तं उपरितनं वाक्यं सम्यगवधार्यम्। निराशामये आशाज्योतिप्रदर्शनायैव भगवता एवमुद्बोधः कृतः। समुद्रमथनसन्दर्भः अनुसन्धीयते चेत्संस्कृतप्रचारकाणां मनस्समाहितं भविष्यति। तत्र अमृतोत्पत्तिस्तु आसीत्, परन्तु प्रथमतः विषस्यैव उदयः आसीत्। एवमेव एतावत्पर्यन्तं मृतभाषात्वेन क्रियमाणः दुष्प्रचारः अद्यावसितः। अतः अस्माकं कालकूटबाधा निवृत्ता। कालकूटः ईश्वरेणैव गिलितः। इतः अमृतमुत्पत्स्यते। अतः अश्रान्तैः एकतामापन्नैः संस्कृतज्ञैः तत्प्रेमिभिश्च प्रचाररूपं मथनं अविरतं अविच्छिन्नं च कर्तव्यम्।

### रथः स्थानाच्चलति

जगन्नाथरथोयं रज्जौ गृहीतो बहुभिर्भक्तैः। केचन भक्ता अपि रथस्य महत्तां आत्मनः क्षुद्रतां च भावयित्वा पार्वतः स्थिताः। परन्तु अल्पसंख्याकैरपि भक्तैः आकृष्टः स रथः भगवत्कृपया स्थानात् चलितः। इयमेव सूचना तत्प्रस्थानस्य यत्सर्वकारः स्वच्छन्दसंस्कृतप्रचारकसंस्थानां कृते अनुदानं कर्तुमद्युङ्क्ते।

अयमवसरः न लङ्घनीयः। आगच्छत! भारतीयाः! हस्तावर्पयत रथरज्जौ, आकर्षत यथाशक्ति! सोदराः,

मा विस्मरत एकसूत्रतां, भवदाकर्षणं व्यर्थमासीदिति मा मनुध्वम्। भवत्प्रयत्नेनैव खलु रथश्चलितः स्थानात्। एष निस्संशयं विहरिष्यति रथ्यासु। परन्त्विदमवधेयम् - उपरिस्थस्य चामरग्राहिणः आज्ञामनुसृत्य आकर्षत रज्जुं संघीभूय। मार्गे आगमिष्यति रथः। आगतस्य तस्य निरोधे न कोपि प्रभविष्यति। स निम्नानि उन्नतानि च स्थलानि समीकुर्वन् प्रयास्यति।

संस्कृतप्रचारकाः! स्वीयप्रयत्नानेकीकुरुत, अन्याः संस्थाः आत्मना मेलयत, कार्यक्षेत्रे आत्मबलं प्रदर्शयत। राजकीयस्वातन्त्र्यसम्पादने अनुभूतसंघशक्तिमाहात्म्यानां अस्माकं एतद्विषये कुतो मतिविपर्ययो भवेत्? ज्ञातानां अज्ञातानां धनवतीनां धनहीनानां च संस्थानां सङ्केताः प्रथमतस्सम्पादनीयाः। ताभिः सह पत्रव्यवहारः कर्तव्यः, तत्साहाय्यस्य प्रदाने आदाने च प्रयतितव्यम्।

संस्कृतज्ञान् प्रति इयं विशिष्टा विज्ञापना। अन्येभ्योपि ते संस्कृताय अधिकतया ऋणिनः भवन्ति। अतः तैः तदुन्नत्यै यथाशक्ति आचेष्टितव्यमेव। एतद्विज्ञाय ते स्वविद्याबोधनव्रतमवलम्बनीयम्। ते प्रत्येकं दश विद्यार्थिनः संस्कृतं ग्राहयितव्याः प्रतिवत्सरम्। एवं कृते लक्षशो जनाः संस्कृतज्ञाः अचिरेणैव भविष्यन्ति। आचार्याः शास्त्रिणः शिरोमणयः विद्याप्रवीणाः विद्वांसः प्रवेशपरीक्षोत्तीर्णाश्च एवमादयः स्वकृतज्ञतां संस्कृताय प्रकटयेयुः। एवं कृते संस्कृतं गृहे गृहे मुखे मुखे भविष्यति, भारतीयसंस्कृतिश्च अविच्छिन्ना भविष्यति, वयं च स्वकर्तव्यनिर्वहणेन भारतस्य योग्यपुत्राः गण्येमहि॥



# कृतकृत्यानां प्रभावः

महाविद्वान् प्रतिवादिभयङ्कर अण्णङ्गराचार्यः,
श्री काञ्ची.

( पूर्वानुबन्धः )

अहह! एतादृशस्य परमानन्दस्य प्रापके प्रकृतिवियोगे सन्निदधाने सति, भगवद्भक्ताः कीदृशं च कियन्तं च प्रहर्षमनुभवेयुरिति सर्वज्ञोऽपि नालं ज्ञातुमिति स्थिते किमस्त्यस्माकं कथयितव्यम्। 'यदर्थं वयमियता कालेन प्रायतामहि, तत्फलप्राप्तिसमयस्संनिहित' इति जानन्तस्ते तत्त्वत एव तादृशमानन्दमनुभवन्ति। 'यदेव दिनमस्माभिः चिरात्प्रतीक्ष्यमाणमासीत्; तदेवाद्य दैवादुपस्थितमिति प्रमोमुद्यन्तेतमाम्। नान्यं कंचिदानन्दमवगच्छन्ति ते ये पारमार्थिकभगवद्भक्ताः॥

कोऽपि महानुभावः शारीरसुखोद्देशेन वा हेत्वन्तरेण वा स्थलजलानेलसौष्ठवसुभगं किमपि देशान्तरमधिजिगमिषुः प्रयाणात्प्रागेव तत्र प्रेषयति बहूनि वस्तूनि यानि तत्र स्वानुभवार्थमावश्यकानि परिचारकाः पाचकाः शकटानि वाजिनश्शयनीयमित्यादीनि। एवं नाम प्रागेव तेषां प्रेषणादस्य तद्देशप्राप्तिसमनन्तरमेव सुखवासयोग्यानि सर्वाण्यपि संविधानान्यनायासं संपद्यन्ते। तत एव चास्य तत्र न कोऽपि क्लेश उत्पद्यते। स्वीयसदनापेक्ष्याप्यधिकतरमेव सुखमनुविन्दति स तत्रेत्यपि वक्तव्यं स्यात्। अत एव च स न स्मरति सकृदपि निजगृहस्य। स्मरन्नपि वा न दूयते। प्रत्युत प्रहृष्यतितमाम्। एवमेव भक्ताः प्रागेव प्रहिण्वन्ति सर्वानपि संभारान् स्वप्राप्यस्थानं परमपदं प्रति। ततश्चैतेषां कृते तत्र सर्वाण्यपि संविधानानि सर्वत एव संविहितानि स्युः। परं त्वियानत्र भेदः। निर्दिष्टपूर्वो महानुभावः स्वाधिजिगमिषिते स्थाने प्रति स्वकीयसदनादेव शकटघोटकादीनि वस्तून्यावश्यकानि स्वयं प्रहिणोति। भक्तास्तावदितो लोकान्नामुत्र किमपि प्रेषयन्ति, तत्रैवैषां सर्वाण्यपि वस्तूनि सुलभतामियुः। जगतीह लभ्यमानवस्त्वपेक्षयाऽपि सुतरामतिशयितानि स्थिरप्रतिष्ठानि शाश्वतस्वभावानि च वस्तूनि तत्र लभ्येरन्नित्यपरोऽयमतिशयः। शास्त्रविश्वासशालिनामेषा निरपाया संपत्तिः।

भक्ताः खलु यस्यावसथे आतिथ्यग्रहणाय गच्छन्ति, तस्य महापुरुषस्यानुभावः कियानिति कच्चिज्जानन्ति पाठकाः। यः खलु अनन्तानि ब्रह्माण्डमण्डलान्यत्यल्पसंकल्पमात्रतः कल्पयितुं प्रणाशयितुं च प्रभवति, येन सूर्याचन्द्रमसोरपि तेजः प्रदीयते, यस्यैवाज्ञया किंकुर्वते चतुर्मुखपञ्चमुखषण्मुखादयोऽपि देवप्रवराः, तस्यैव खलु सर्वज्ञस्य सर्वशक्तस्य सर्वेश्वरस्य सद्मन एते भवन्त्यतिथयः। तस्यैव पुरुषस्य परमानन्दनिलयं रम्यं हर्म्यं प्रतिपद्यन्ते। कस्य वा वस्तुनः का वा न्यूनता तत्र भविष्यत्येतेषाम्॥

भक्तानां खलु प्राणप्रयाणसमयः पारितोषिकप्राप्तिदिनमिव भवति। कस्यचन चक्रवर्तिनस्सार्वभौमस्य शासनं शिरसा वहन् सेनापतिः प्रभोः प्रतिद्वन्द्विवृन्दानि जेतुं सपरिकरो विनिर्गच्छतीति गृह्यताम्। अथ च हार्दभक्तिपरिकर्मितः स्वप्रयोजनमश्रद्दधानश्च संगरं निर्वर्त्य शत्रून् विनिहत्य विजयमुपनमय्य प्रत्यावर्तते प्रभोरुपकण्ठम्। सोऽपि चक्रवर्ती विजयशीलस्य वाहिनीपतेः चातुरीमवगत्य परमानन्दसान्द्रस्वान्तः सेनान्यं तं बिरुदप्रदानसंमानदानादिभिः बहूकर्तुं कमपि दिवसं निर्दिशति। तदनु स सेनानीस्संमाननामीप्सुः कीदृशेन भावबन्धेन प्रतीक्षते तं दिवसम्। कथमिव स त्वरते तद्दिवससंनिधये। ततोऽप्यधिकतरमेवानन्दमादधाति मरणदिनं परमभक्तानामिति किमिति तत्र ते कुतूहलिनः प्रतीक्षेरन्?॥

ते खलु भक्ताः जगदीश्वरस्य दिव्याज्ञां विभूताविह विशेषतः पर्यपालयन्। यावज्जीवमनन्यप्रयोजनास्तदेकतानमानसा हार्देन प्रेम्णा तमेव पर्यचरन्। परमकारुणिकः परवासुदेवश्च तान् विशेषतो बहूकर्तुं बद्धपरिकरः सन्नह्यतितमाम्। निर्दिशति च स एतेषां पाञ्चभौतिकशरीरवियोगावसरमेव बहुमानदाननिदानवासरम्। ये खलु जानन्ति परमार्थमिमम्, किं ननु तेषामस्ति ततोऽन्यद्दिनं किमप्यानन्ददायकं? किं वास्ति सादरं प्रतीक्षणीयमन्यद्दिनं प्रतीक्षणार्हं प्रहर्षदं वा। अत एव ते तदात्वे परमानन्दं प्राप्नुवन्ति॥

कश्चन सुकुमारः शुकशावो बलाद्गृहीतः पञ्जरबद्धो वरीवर्ति। स च पञ्जरान्निष्क्रम्य स्वैरं विहर्तुकामः फटफटायितपक्षो विरौति। दिष्ट्या च समुद्घाटि पञ्जरस्य कवाटिका। सोऽपि कीरपोतः सरभसमुड्डीय स्वैरं जग्मिवान् यादृशमानन्दमनुभवति, तादृशमेवानन्दममन्दमनुभवति मुक्तात्मेति सर्वं समञ्जसम्॥



# राजाजीकथा ६



## ( आ. वरद्राजः )

### " सुखं हि दुःखान्यनुभूय शोभते "

कश्चित् दरिद्रः कृषीवलः श्रीकृष्णपरमात्मानं परमभक्तियुतः पूजयन्नास्त । तस्मिन्ननुग्रहवान् भगवान् "तवाभीप्सितं किं ? ब्रूहि, दास्यामि, परन्तु, इदमवधेयं "तदेव ते दास्यामि यत् सर्वेभ्यः दातुं शक्येत, न केवलं तुभ्यमेव दातुं शक्यते , तत् यत्किञ्चिद्वाऽस्तु" - इत्याह ।

  

"गोपीलोल ! गोपाल !! तद्दीयतां, यन्मेऽभिलषितम् । यदि तदेव सर्वेभ्योऽपि दातुमिष्यते न मे तत्र काप्यनुपपत्तिः । नाहं तथा कुत्सितः असहिष्णुर्वा, न मेऽसूया कस्मिंश्चिदपि व्यक्तिविशेषे" - इत्याह कृषीवलः ।

"जानाम्यहं - त्वमतीव विनीतः सुशीलश्च, वृणीष्व यदभीप्सितम् । अथवा पत्न्या सह आभाष्य ब्रूहि । पश्चात् परिवर्तयितुं न शक्य" - इत्याह भगवान् श्रीकृष्णः ।

"देवदेव ! देवकीनन्दन !! बाढं, गृहे पत्न्या सह संभाष्यैव वक्ष्यामि ग्रहीष्यामि च वरम् । भवद्दर्शनमात्रेण हृदयं आनन्दसागरे निमग्नं सत् रसातलं प्राप्तमिव । मेधोऽपि उन्मस्तकं सत् न जाने कुत्र वाऽकाशे विलीनम्। अतोऽद्य अस्मात्प्रयत्नात् विरम्य श्वः वा परश्वो वा वरं वरितुं मां अनुमन्यस्व" - इत्याह कृषीवलः ।

"एवं क्रियता" मित्याह भगवान् ।

  

कृषीवलस्तु नक्तं पत्न्या सह पर्यालोचयत्। भर्तुः संपादितेन वरेण भार्याऽतीव तुष्टा। किं वा वरं वरीतुं युक्तं, इदं वा, तद्वा इति सुदीर्घं विमृश्य अन्ते तौ दम्पती कमप्यर्थं निश्चितवन्तौ।

  

परेद्युः कर्षकः परमात्मानं श्रीकृष्णं दध्यौ। भगवानपि सस्मितं दर्शनमदात् प्राह च - वत्स! किं वा निश्चितमिति।

"करुणावरुणालय! कोपं मा कार्षीः, निर्धनोऽहं अज्ञानी च। अतः प्रियया सह पर्यालोचितम् यथाभवदुक्तम्" - इत्यारेभे वक्तुं शनैः शनैः।

"कुतः सन्दिहसे? यथेच्छं वृणीष्व यं कमपि वरं। अवश्यं दास्यामि, यत्तस्मिन्नेव क्षणे सर्वैरपि लभ्येत-नैतद्विस्मर्तव्य" मित्याह श्रीकृष्णः।

"महाप्रभो! मदीया मञ्जूषा सदा धनसमृद्धा भूयात्। सर्वाण्यपि रौप्याणि नाणकानि भूयासुः। यावद्वा ततो धनं गृह्यातां कामं, नान्तं गच्छेदित्येषा ममेच्छा" - इत्याह कर्षकः।

"वत्स! कुतस्त्वं द्रव्याशाबद्धोऽसि" – इति गोविन्दः वरप्रदानं विलम्बयामास।

"यत्किञ्चिदस्तु नाम कामं, मदभीप्सितं तावदिदमेव" इति सविनयमेव हठं साधयामास कर्षकः।

यद्येवं तत्तथाऽस्तु - इत्युक्त्वाऽन्तर्दधे गोविन्दः।

  

"यद्यस्ति धनं पुष्कलं तर्हि सर्वं सुसाध्यं। यद्यदभीप्स्यते तत्तल्लप्स्यत एव नूनं। अतः तादृशमेव वरं वृणीष्व" इति पत्नीसुभाषितं अनुसृत्यैव स कर्षकः स्वीयं वरं साधयामास।

  

यथावरप्रदानं कर्षकस्य मञ्जूषा धनसमृद्धाऽसीत् । झडित्येव कर्षकः हस्तपरिमितं धनराशिं गृहीत्वा निकटस्थं पुरं गत्वा वस्त्रापणं प्राविशत् । गृहिण्याः द्वे समीचीने चीरवसने क्रेतुं सः प्रवृत्तः ।

मार्गमध्ये सर्वेपि जनाः बहुकुतूहलेन अवसन् । गोविन्देन दत्तो वरः सर्वेभ्योपि लब्ध इत्येतत् विस्मृतं तेन प्रथमम् , पश्चात् स्मृतम् । सर्वान् सुखिनः सन्ताष्टांश्च दृष्ट्वा सोपि मुमुदे ।स वस्त्रापणं प्रविष्टः । द्वे चीरवसने समानयेत्याह आपणिकम् ।

भवान् किं वा दास्यतीत्यापणिकः पप्रच्छ । “यावद्वा मूल्यं ब्रूषे तावद्दास्यामि - इत्याह कर्षकः ।

मूल्यं वा ? नास्माकं धनमपेक्षितम् । धनं न केनाऽपि परिगण्यते । तत्सर्वेषां सकाशे पुष्कलमस्ति । कति वा तण्डुलभस्त्रयः प्रदीयेरन् ? उच्यतामित्याह आपणिकः ।

रौप्यकाणि कुतो न परिगण्यन्ते ? किमासीत्तेषां ? इत्यप्राक्षीत् कर्षकः । आपणिकः केवलं परिहसतीत्यमन्यत च सः ।

इदानीं किल सर्वेषां सकाशे यथेष्ट धनमस्ति । न कुत्राऽपि तस्य अभावो लोपो वा । अधुना न कोऽपि धनमभिलषति. नेदं विदितं भवता ? - इत्यपृच्छदापणिकः । कर्षकस्य नायं समाचारः सुविदितः यो वरप्रदानादनु एवं परिणतः । स पार्श्वस्थापणं गतः । “तण्डुलं दलं वा यत्किञ्चित् खाद्यपदार्थमानय, धनं मास्तु, तत्तुपुष्कलमस्ति अस्माकं सविधे” - इत्याह तत्राप्यापणिकः । कर्षकः शोकाकुलचित्त आसीत् । ततः परं स यत्रकुत्राऽपि आपणे गच्छतु, यत्किञ्चिद्वस्तु क्रेतुं प्रवर्ततां, सर्वत्र सर्वस्यापि कृते तस्येयमेव परिस्थितिः पुरःस्थिताऽसीत् । रौप्यकममूल्यमेवासीत्, मूल्यं लुप्तप्रायम् । तौ कर्षकदम्पती दुःखभागिनावभूताम् ।

  

“गोविन्द ! अन्याय्यं ते प्रतारणं” - इति रुरोद कर्षकः । “आत्मैव रिपुरात्मनः” इत्याह गोविन्दः । “सपरिवारोऽहं बुभुक्षादग्धो मरिष्या”मीति कर्षकः साश्रुनयनं प्राह ।

 

"किं वा वरं प्रत्यर्पयितुं इच्छसि" इत्यपृच्छत् श्रीकृष्णः । "महता सन्तोषेण त्वदीयं वरं पुनस्त्वमेव गृहीष्व, यथापूर्वं अहं श्रमजीवी भविष्यामि । केवलं सहायको भवतु भवान् । अलमेतावता" - इत्याह कर्षकः स्थिरबुद्धिः ।

"युक्तमुक्तं, त्वमपि श्रमजीवी भव । सर्वेऽपि श्रमजीविनो भवन्तु" इत्याह गोविन्दः ॥

" न विश्रमोऽस्ति मनसः श्रमजीवनमन्तरा "

  

## वन्दे मातरम्



[ प्रत्यहं बालैः बालिकाभिश्च पठनीयम् ]

वन्दे मातरम् वन्दे वाणीम्
वन्दे पितरम् वन्दे गौरीम्
वन्दे भारतम् वन्दे लक्ष्मीम् ।
वन्दे पितामहम्
वन्दे शङ्करम्
वन्दे विष्णुम् ।
वन्दे देवान् वन्दे गुरून्
वन्दे कवीन् वन्दे वन्द्यान्
वन्दे रामम् वन्दे सीताम् ॥

साहित्यव्याकरण विद्याप्रवीणः
तट्टा नरसिंहाचार्यः बी. ए.,
चिट्टिगूडूरु.

(3)

# सुलभपाठमाला ५

## उकारान्तशब्दाः

गुरुः अस्माकं पूजनीयः । सः विद्यां उपदिशति । गुरुं देवं च समं भावयेत् । गुरुणा उक्तं वचनं अंगीकर्तव्यम् । गुरवे नमः । गुरुभ्यः फलं प्रदातव्यम् । गुरुषु भक्तिः शुभा । गुरूणां सेवा कर्तव्या । गुरुभिः सह वसेत् । भानुः शीतं नाशयति । तरोः फलानि पतन्ति । शम्भुः अस्मान् रक्षति । साधुन् सर्वदा पूजयेत् । रामलक्ष्मणौ साधू । पाण्डवाः सधवः । परित्राणाय साधूनां हरिः लोके अवतरति । घटं पटं च आनय । धेनुं पश्य । तस्याः वत्सः क्षीरं पिबति । गोपालानां धेनवः रमणीयाः वर्तन्ते । क्षीरं दधि तक्रं च धेनोः भवन्ति । रामस्य सूनुः कः ? रामस्य सूनुः कुशः । लवः कस्य सूनुः ? लवः अपि रामस्य सूनुः । कुशलवौ रामस्य सूनू । रामस्य द्वौ सूनू । पाण्डोः पंच सूनवः । द्वे धेनू गच्छतः । दौ मनुजौ आगच्छतः । धेनूः पश्य । बटून् आह्वय ॥

प्रश्नाः — गुरवे किं प्रदातव्यम् ? तरुभ्यः कानि पतन्ति ? कः साधुः ? के साधवः ? हरिः कुतः अवतरति ? धेनोः वत्सः किं करोति । रामस्य पुत्रौ कौ ? दशरथस्य सूनवः के ? अर्जुनः कस्य सूनुः ? गोपालाः काः पोषयन्ति ? भानुः किं करोति ? चन्द्रः किं करोति ? तरुषु किं भवति ?

| पुंलिङ्गीयाः | स्त्रीलिङ्गियाः |
|---|---|
| भानुः | धेनुः |
| तरुः | तनुः |
| गुरुः | जानुः |
| सूनुः | |
| पाण्डुः | |
| रेणुः | |
| साधुः | |
| वायुः | |
| वेणुः | |

—:०:—

# प्रलोभी वञ्चितः

पडाल अब्बा रेड्डिः, ( रा० प्रवीणः )
कोव्वुरु.

जर्मनदेशे कश्चित् प्रलोभी स्वर्णकारो निवसति स्म । सः चोरैः चोरितं स्वर्णं अल्पमूल्येनैव क्रीणन् ईषद्धनिकः संवृत्तः ।

एकदा सः स्वर्णकारः स्वगृहाद्बहिः स्थितं कञ्चित् दरिद्रं क्षुधार्तञ्च कृषीवलं दृष्ट्वा अन्तराहूतवान् । प्रकोष्ठं प्रविश्य सः कृषीवलः भीत इव तं स्वर्णकारमपृच्छत् – 'अत्र आवाभ्यां ऋते कश्चिदन्यः अस्ति कि'मिति । 'अत्र कश्चिदन्यो मनुष्यो नास्ती'ति – स्वर्णकारः अकथयत् । एतच्छ्रुत्वा दरहसित-मुखः सः कृषीवलः एवमपृच्छत् – "शिशुशिरःपरिमितं सुवर्णं त्वं क्रेतुं शक्नोषि किं? कियन्मात्रं धनं दास्यसि चे"ति ।

एतद्वचः श्रुत्वा अव्यञ्जितहर्षलक्षणः सः स्वर्णकारः स्वभार्यां आहूय अतिरुचिराणि भक्ष्याणि आनयेति आज्ञापितवान् । सा क्षणाभ्यन्तरे एव बहु-मूल्यानि चातिरुचिराणि भक्ष्याणि आनीतवती । ततः स्वर्णकारः तान् पदार्थान् निराकुर्वन्तमपि कृषीवलं भक्षयितुं प्रार्थयामास । ततः क्षुधार्तः कृषीवलः तानि सर्वाणि भक्ष्याणि उदरपूरं भक्षयित्वा प्रत्युत्तरं श्रावयितुं तं स्वर्णकारं त्वरयतिस्म ।

अत्रान्तरे एव स्वर्णकारः स्वभार्यया साकं आलोच्य मधुरस्वरेणावदत् – 'यदि शिशुशिरःपरिमितं स्वर्णं चेदहं तस्मै सहस्रं रूप्यकाणि दास्यामि । कुत इति चेत् कृषीवलस्य एकं रूप्यकमपि अहं अन्यायेन गृहीतुं न इच्छामि । ततः त्वया अपहारितं स्वर्णं रहसि उचितमूल्येन विक्रेतुमिच्छास्ति चेदहं न्यायप्रियः क्रेष्यामि इति ।

'यदि कुत्रापि भाग्येन मया शिशुशिरःपरिमितं सुवर्णं लभ्यते तत्सुवर्णं त्वय्येव क्रेतव्यमि'त्युक्त्वा कृषीवलः भक्ष्यपदार्थदात्रे तस्मै धन्यवादानर्पयन् सहसा चलितः ॥ ( जर्मनकथायाः अनुवादः )



# विश्वामित्रः

## ( विश्वस्य मित्रं 'मित्रे चर्षा' विति दीर्घः )

श्री० नारायणमूर्तिः

राज्ञो गाधेः पुत्रो विश्वामित्रो राजा बभूव । यदा तदा स सकृत् सेनया सहाटन् वशिष्टमहर्षेराश्रमं प्राप । वशिष्ठसकाशे कामधेनोः पुत्री नन्दिनीनाम्नी धेनुर्बभूव । तस्याः कृपया वसिष्ठः ससैन्यं विश्वामित्रं राजानं भोजनाय निमन्त्रयामास ।

प्रार्थ्यते चेन्नन्दिनीधेनुः सकलानपि पदार्थान् प्रदास्यतीति यदा विश्वामित्रोऽज्ञासीत्तदा स तां ययाचे वशिष्ठम् । बहुप्रार्थितोऽपि न ददौ तां गां वशिष्ठः । तेन विश्वामित्रः स्वसैनिकानवादीत – "नीयतामियं धेनुः नन्दिनी बलात्कारेण" इति ।

सैनिका गां तां बलादाचकर्षुर्यदा धेनुश्च हुंकारमकार्षीद्यदा तदा वशिष्ठस्तामाह – "मातः ! अहं तु ब्राह्मणः । नाहं योद्धुं शक्तः । शक्तिः स्याद्यदि भवत्यां तर्हि स्वामेभ्यो मोचय" इति । निशम्येदं वचः क्रुद्धा नन्दिनी हुंकारमारेभे । तदा तस्या नासारन्ध्राभ्यां सहस्रशः सैनिकाः प्रादुर्बभूवुः । ते च विश्वामित्रस्य समामपि सेनां प्रताड्य प्रपलाययामासुः ।

"वशिष्ठः सामान्यबलेन जेतुमशक्य" इति ज्ञातवान् विश्वामित्रः । अतस्तपस्तप्तुं प्रययौ सः । स तपस्तप्त्वाशुतोषं प्रसन्नं चकार शंकरम् । शंकरस्तस्मै ददौ बहून्यस्त्रशस्त्राणि । स्वीकृत्य तानि पुनः स वसिष्ठेन साकं युद्धं कर्तुमाययौ । किन्तु वशिष्ठस्य दिव्यतेजोमयब्रह्मदण्डं स्पृष्ट्वा नष्टानि तान्यस्त्रशस्त्राणि सर्वाण्यपि । तेन मेने विश्वामित्रः "क्षत्रियबलात् ब्राह्मणबलं श्रेष्ठ"मिति । स तपस्तप्त्वा भूयो निरचैषीद् ब्राह्मणो भवितुम् ।

विश्वामित्रस्य तपो नष्टमसकृत् । एकवारं मेनका नाशयामास तत्तपः । द्वितीयं वारं राजा त्रिशंकुः वशिष्ठशिष्यः विश्वामित्रसन्निधिमेत्य सशरीरं स्वर्गप्रापणाय प्रार्थयामास । यतो वशिष्ठस्तं निराचकार ततो विश्वामित्रस्तं स्वतपोबलेन स्वर्गं प्रेषयामास । किन्तु देवतास्तं स्वर्गात्पातयामासुरधस्तात् । त्रिशङ्कोरार्तनादं श्रुत्वा विश्वामित्रस्तमाकाश एव स्थिरं चक्रे । एवं कारणेन नष्टं तत्तपः ।

स तपःप्रभावेण नूतनसृष्टिमेव कर्तुमारेभे। धान्यानि बहूनि बहून् पशूंश्च समर्ज विश्वामित्रः। तदा विरिञ्चिरागत्य सृष्टेस्तं रुरोध अभणच्च – "वशिष्ठ एक एव भवन्तं ब्रह्मर्षिं कर्तुं शक्तः" इति। वशिष्ठस्तु तं सदा राजर्षिरिति ब्रूते स्म। तेन क्रुद्धो विश्वामित्रः सुदासाय राज्ञे शापं दापयित्वा द्वादशवर्षपर्यन्तं चकार राक्षसम्। राक्षसरूपेणैव स भक्षयामास सर्वानपि पुत्रान् वशिष्ठस्य।

अन्ततः कस्याञ्चिद्रजन्यां विश्वामित्रः स्वयं निलीयायुधमादाय वशिष्ठाश्रमं जगाम हन्तुं तम्। तस्मिन्नेव काले वशिष्ठः स्वपत्न्यारुन्धत्या सार्धं विश्वामित्रस्य तपःप्रशंसां कुर्वन्नास्त। तच्छ्रवणेन विश्वामित्रस्य द्वेषः सर्वोऽपि प्रपलायितः। स आयुधं प्रचिक्षेप वशिष्ठस्य चरणयोः पपात च। तस्मिन्नेवाहनि तं ब्रह्मर्षिरित्युवाच वशिष्ठः।

सत्यवादिनं राजानं हरिश्चन्द्रं विश्वामित्र एव परीक्षितवान्। त्रेतायां स्वयज्ञरक्षणाय ययाचे श्रीरामलक्ष्मणौ दशरथं महाराजम्। ददौ च दिव्यास्त्राणि स्वाश्रमे श्रीरामलक्ष्मणाभ्यां, यानि प्रदत्तानि शंकरेण भगवता।

तपोबलेनैकस्मिन्नेव जन्मनि ब्राह्मणत्वं प्राप्तवान् सः सप्तर्षिष्वन्यतमो वरिवर्ति विश्वामित्रः। अयं श्रीरामचन्द्रस्य वैकुण्ठलोकगमनादनु स्थितः सप्तर्षिमण्डले॥



# अभिज्ञानशाकुन्तलम्

के. सूर्यनारायणशास्त्री, विद्याप्रवीणः
तेनालि.

श्लो० काव्येषु नाटकं रम्यं
नाटकेषु शकुन्तला,
तत्रापि च चतुर्थोऽङ्कः
तत्र श्लोकचतुष्टयम् ॥

दृश्यश्रव्यत्वभेदेन काव्यानि द्विविधानि । दर्शनमात्रेण पण्डितपामराणामानन्दजनकानि दृश्यकाव्यानि तानि च नाटकादीनि । पठनश्रवणाभ्यां आनन्दजनकानि श्रव्यकाव्यानि । यद्यपि श्रव्यकाव्यानि चतुरतरशब्दार्थाभ्यां गुणालङ्कारैः वर्णनासौष्ठवेन च पाठकानां चित्तं द्रावयन्ति, तथापि न पामरजनवेद्यानि । कृतत्रेतादिषु संवृत्तं कथावस्तु संगृह्य कविः स्वरचनाशक्त्या कल्पनापाटवेन च नाटकरूपेण प्रत्यक्षमनुभवनीयं करोति । नटश्च स्वनटनाकौशलेन द्रष्टॄणां पण्डितपामराणां चित्तस्य द्रुतत्वं परिकल्पयति । लाक्षायां राग इव द्रवीभूतचित्तवृत्तौ काव्यात्मभूतः आनन्दात्मको रसः तादात्म्यमुपैति । अयमेव रसानुभव इत्युच्यते । दृश्यकाव्येभ्यः यथा रसस्फुरणं न तथा श्रव्यकाव्येभ्यः । अतः "काव्येषु नाटकंरम्य" मिति सूक्तिः प्रचलिता ।

यद्यपि नाटकानि सर्वाण्यपि रम्याणि, तथापि भावभासकं प्रकरणललितं च कालिदासस्य शाकुन्तलं अत्यन्तं रमणीयतरं विराजते । भारते च दुर्वाससश्शापः दुष्यन्तस्य देवलोकगमनं इत्यादिवृत्तान्ताः न सन्ति, पद्मपुराणे तु सन्ति । अतः कविरयं पद्मपुराणान्तर्गतवृत्तान्तमाकलय्य नाटकमिदं संग्रथितवान् । नाटके चास्मिन् धीरोदात्तो दुष्यन्तो नायकः । दैवांशसंभूता पराधीना शाकुन्तला नायिका । सर्वरसप्रधानः सर्वजनादरणीयश्च संभोगशृङ्गारोऽत्र रसः । विप्रलंभोदयश्च

अङ्गभूताः। अनन्यसुलभकवित्वशक्तिपरिचयाधायके अस्मिन् शाकुन्तले प्रकृत्याः गृहस्थानां च वर्णनं लोकोत्तरं यथा वर्णितम्। शाकुन्तलनाटकरचनया कविरयं न केवलं भारते वर्षे किन्तु समस्तभूमण्डले च विजयपताकां स्थापितवान्। कवेरस्य वचनानि नात्यन्तगूढानि नात्यन्तप्रकटानि, किन्तु नातिप्रकटानि च भूत्वा रसभावान् व्यञ्जयन्ति रञ्जयन्ति च सहृदयहृदयानि।

अस्य कवेः रचनाकौशलमनन्यादृशं। कविरयं "ग्रीवाभंगाभिराम" मित्यत्र स्वभावादिवर्णनकौशलं प्रदर्शितवान्। "यदालोके सूक्ष्म"मित्यत्र प्रदर्शितं प्रकृतिवर्णनं सहृदयहृदयं प्रसन्नतरं करोति।

"सरसिजमनुविद्ध"मिति श्लोकः अत्यन्तभावस्फोरकः, स्वभावेन रमणीयं वस्तु निकृष्टपदार्थसङ्गत्यापि रमणीयतरमेव, अतः लोकोत्तरसौन्दर्यवती राजपुत्री अप्सरस्संभवा शकुन्तला वल्कलधारणेनापि रम्यतरैव इति एतद्विषये उपमानद्वयं प्रदर्शितम् कविना शैवलानुविद्धसरसिजमेकं मलिनलक्ष्मयुक्तश्चन्द्रश्चापरः। सरसिज-साम्येन सौकुमार्यादयः चन्द्रसाम्येन अह्लादकत्वादयश्च स्फुरिता भवन्ति अतो न कालिदासप्रयुक्ता उपमा निरर्थका।

"दर्भाङ्कुरेण"इत्यत्र शकुन्तलया प्रदर्शितः मनोभावः लोकरीतिमनुसृत्य रम्यतरमार्गेण उपवर्णितः कविना। एतादृशभावस्फोरकपदजालमेव, न केवलमस्य नाटकस्य रम्यतायाः कारणं, किन्तु अनन्यादृशरीत्या कृतं प्रकृत्यादिवर्णनं च कारणं भवति। अतो "नाटकेषु शकुन्तले"ति सूक्तिः व्याप्ता। नाटकमिदं सर्वमत्यन्तरमणीयमपि, चतुर्थोऽङ्कः भृशं रमणीयतरः। अङ्के चास्मिन् भगवती-तोषोपलब्धप्रसादभासुरः कविरयं शकुन्तलायाः प्रस्थानं लोकरीतिमनतिक्रम्य उपवर्णितवान्। अयमेवास्य अङ्कस्य अतिशयः। किञ्च अस्मिन्नङ्के श्लोकचतुष्टयं भावस्फोरकं सांसारिकव्यवहारप्रदर्शकं अचेतनाऽज्ञानिप्रेमप्रदर्शकं च भाति। एते विषयाः अस्मिन्नङ्के सर्वस्यान्तद्रावकविधया वर्णिताः। "यास्यत्यद्य शकुन्तलेति" श्लोके शकुन्तला न याता, नापि प्रस्थिता, किंतु यास्यतीत्यनेनैव विरक्तिं प्राप्य अरण्ये निवसतः कण्वस्य पोषणमात्रेण संजातं दुःखं उपदर्शितं। अनेन च इष्टजनवियोगजं दुःखं अतिदुस्सहं इति सूचितम्।

"पातु न प्रथम"मिति श्लोके शकुन्तलया पुष्टानां वृक्षाणां अनुमतिः वर्णिता। अनेन च बन्धुजनानां स्वप्रयाणवृत्तान्तस्य निवेदनं सूचितम्।

"अस्मान् साधु विचिन्त्य" इत्यस्मिन् दुष्यन्तस्य कण्वकृतोपदेशः वर्णितः। अस्मानित्ययं शब्दः कण्वस्य निर्धनतां निग्रहानुग्रहसामर्थ्यं च सूचयति। "सामान्यप्रतिपत्तिपूर्वक"मिति शब्दः राजन्, शकुन्तला सपत्नीसदृशभावेन प्रेक्षणीया, न हीनभावेन, किञ्च विवाहकालकृतप्रतिज्ञामनुसृत्य सपत्नीभ्यः अधिकतया च द्रष्टव्येति स्फोरयति। "शुश्रूषस्व" इति श्लोकेन शकुन्तलया पतिगृहे यथा प्रवर्तितव्यं तदुपदिष्टं।

वनवासिनोपि कण्वस्य पुत्रीवियोगदुस्सहत्वं निग्रहानुग्रहसामर्थ्यवतोपि तस्य जामातृसन्निधौ अनौद्धत्यप्रकटनं इत्यादयो भावाः अस्य श्लोकचतुष्टयस्य अनुत्तमत्वं प्रकटयन्ति। अत एव "तत्र श्लोकचतुष्टय"मिति सूक्तिः प्रचलिता॥



# नहुषाभिलाषः

( पूर्वानुबन्धः )

## श्री पै० रामानुजाचार्यः

लक्ष्मीः – हला, इंद्राणि,

देवलोककामुकनरास्सुकृतिकयां तदुचितां रसातले ।
कृत्वा खलु लभन्ते तत्सुखं कर्मलोकजननं वरं नु तत् ॥

शरदा – कर्मलोकजननं वरमिति यत् तद्वरमेव भगवत्परं यदि ।
अस्मदीयपरं खलु मध्यमं पापरौरवपरं सुनिन्दितम् ॥

इन्द्राणी – सख्यौ लक्ष्मीशारदे, इदानीं मम भर्ता महेन्द्रः वृत्रासुरवधजात-कृत्याभिभूतः कुत्र तिष्ठतीति देवैरपि न ज्ञायते। इदानीमेव भूलोकात् नहुषाख्यचक्रवर्ती अस्मत्कामुकः अत्र आगत इति श्रोष्यते। तस्मात् अहं तं नानुसराम्येनं कश्चिदपि व्रतं व्यपदिश्य यावद्भर्त्रागमनं।

सख्यौ – (जनान्तिकं) अयमेव समीचीन उपायः।

नहुषः – (सहर्षं आत्मगतं)

इयमेव पुरा स्वप्ने ह्यनुभूता मया शची।
दृष्टाऽद्य दुर्लभं किं स्यात् भुवने पुण्यकर्मिणाम् ॥

इदानीं महेन्द्रपदगतोऽहं एनां बलात्कारेण यावद्वशीकरोमि (इति तासां पुरतः प्रविश्य) सख्यौ लक्ष्मीशारदे, इदानीन्तनस्त्वत्सखीभर्ता अहमेव। तदेनां परिगृह्णामि (इति सत्वरं इन्द्राणीकरं नाट्येन गृह्णाति)

(नेपथ्ये)

संभृता अद्य संभारा आभिषेचनिका नवाः ।
माननीया महेन्द्रेण शिरसाऽभिनवेन हि ॥

नहुषः – (श्रुत्वा) ऐन्द्राधिराज्याभिषेकार्थं भगवन्त आंगीरसास्समाह्वयन्ते । तद्गच्छामि ।

(इति निष्क्रान्तास्सर्वे)

॥ इति तृतीयोऽङ्कः ॥



॥ अथ चतुर्थोऽङ्कः ॥

(ततः प्रविशति पश्चाद्बद्धं पुरुषमादाय शक्रावतारतीर्थाख्यपद्मिनीरक्षकः नागरिकश्च)

नागरिकः – पद्मिनीरक्षक, दासक, कुत एष बद्धः ?

दासकः – (पुरुषमंगुल्या निर्दिश्य) अनेन दास्याःपुत्रेण चक्रवर्तिनहुषमहेन्द्रे कृतोऽपराधः ।

नागरिकः – कथमिव ?

दासकः – शक्रावतारपद्मिन्यां यःकोऽपि एकं सरसीरुहं सनाळं चोरयति स बद्धः मयि प्रेषणीयः इति ।

नागरिकः – (पुरुषं वीक्ष्य) पुरुष, कस्ते नामधेयः ?

पुरुषः – अहो अपराधशून्यस्यापि मम नामधेयः अपि श्रोतव्यः । शृणोतु स्वामी । अहं सत्यमेव फणामि नवमहेन्द्रपूजाकरणाय बृहस्पतेराज्ञया एतत् गृहीतव्यमिति मातलिनाज्ञप्तः देवदूताख्यः धीवरः ।

नागरिकः – किमिति एतदेव गृहीतव्यं ।

देवदूतः – शृणोतु देवरहस्यं । अस्मिन्काळे पूर्वमहेन्द्रो कीनस्तिष्ठतीति ।

नागरिकः – अस्मदीयचक्रवर्ती पूर्वमेव महेन्द्रलोकं गतः । पूर्वेन्द्रोऽपि बृहस्पति-कृताश्वमेधयागेन ।

दासकः – कदा ? कथं ज्ञातं ?

नागरिकः – यदा ययातिर्युवराजोऽभिषिक्तः विदूषकबाभ्रव्यमुखात् ज्ञातं ।

देवदूतः – इदानीमेवाज्ञप्तोऽहं । कथं ममागमनानन्तरं कृताश्वमेधः पूर्वेन्द्रः ।

नागरिकः – देवमानेन घटिकाकाले मानुषमानेन बहवः कालाः खलु गच्छन्ति ।

दासकः – किं बहुना यथाराजनिदेशमाचरामः (इति निष्क्रान्तौ)

(प्रवेशकः)

(ततः प्रविशति महेन्द्रः इन्द्राणी च)

महेन्द्रः – प्रिये, अप्यनुभूतस्त्वया नहुषेन्द्रः ?

इन्द्राणी – (सक्रोधमिव)

हत्वा वृत्रादिकदाचेन्द्रान् सदा भवान्भवतु स्वयं विलीनः ।
दत्वा मामन्यमनुष्यकस्य हस्ते खलु मालामिव वानरस्य ॥

महेंद्रः – भद्रे, तदा कृत्यापरवशोऽहं नात्मानमपि जानामि ।

इन्द्राणी – अपदिश्य व्रतमेकं विलंबितमेतावन्तं कालम् ।
नहुषकामसमुद्रे मयैतया खल्वनवरूढया ॥

तस्मादितःपरं त्वमेव प्रमाणम् ।

महेन्द्रः – लोके स्त्रियो हि नाम न श्रद्धेयाः । तथाहि —

आहारं द्विगुणं हि पूरुषजनाल्लोकेऽधिकं योषितां
बुद्धिश्चापि चतुर्गुणेति विदिता सर्वेषु शास्त्रेष्वपि ।
ज्ञातं साहसकर्म षड्गुणमिति प्रज्ञावतामग्रगैः
कामो ह्यष्टगुणस्त्वितीरितमहो शृङ्गारपारंगतैः ॥

इन्द्राणी – (संस्कृतमाश्रित्य)

"पश्यति, परेषु दोषानसतोऽपि जनस्सतोऽपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः" ॥

महेन्द्रः – पशुपक्ष्यादिस्त्रीणां स्वभावसिद्धा हि दृश्यते पटुता ।
बोधवतीनां मनुजामरवनितानां च किं विचार्या सा ॥

किञ्च

समयोचितवाक्यराशिभिः परपुंसोऽपि हि मोहयन्ति ताः ।
वनिता निजसक्तमानसं किमु कुर्वन्ति न कामुकं प्रियम् ॥

इन्द्राणि – (सरोषं) नाहं तथा विधा । अहल्याजार एव तथाविधः । तादृशगुणपूर्णेन मां बलात्कारं गृहीतुं कृतः प्रयत्नः ।

(प्रविश्य पटाक्षेण नहुषः)

नहुषः – कः कोऽत्र मम भोगस्थानेन इन्द्राण्या सह सल्लपति !

महेन्द्रः – (नहुषं वीक्ष्य) कस्त्वं मत्समानवेषधरः मम गृहिणीं त्वद्भोगस्थानत्वेन मापसे ?

नहुषः – कोऽहमिति त्वया न विदितः ? शृणु । अपि कर्णकोटिप्रविष्टो विरचितशताश्वमेधाध्वरः नहुषनामाऽवनीतलचक्रवर्ती ?

# सुमतिशतकम्

( पूर्वानुबन्धः )

श्री कुण्टिमद्दि शेषशर्मा

जहि हि परप्रसितसतीं मा मर्षय विप्रलापिनः पुत्रान् ।
अभयं जहीहि भृत्यं जहाहि शश्वत्सतीरतिं सुमते ॥ ॥ ७४ ॥

अप्रियवचनं मा वद, मा याहि च कर्मणा विनान्यगृहम् ।
मा रम पररतनार्यां, माऽऽरुह [illegible] दुर्भगं सुमते ॥ ॥ ७५ ॥

स्त्रीसङ्गं त्यज पर्वसु भूपतिकृपयाधिकं मनुष्व च मा ।
जायामुद्यद्गर्वं पुषाण मा, वस च माऽस्थल सुमते ॥ ॥ ७६ ॥

स्वभ्यक्तदिने सुप्तिः, धौतरदे वीटिका च, युवतीभिः ।
प्रणयकलहात्परं या रति रतुला मूल्यवर्जिता सुमते ॥ ॥ ७७ ॥

सेवाश्रमाऽज्ञनृपतेररिरंसुनितम्बिनीभोगः ।
विरसीभवतस्स्नेहः प्रतिझरसन्तरणसन्निभास्सुमते ॥ ॥ ७८ ॥

पयसा मिलितं सलिलं भवेत्पयोवत्परीक्षितं तच्चेत् ।
विरसयति क्षीररसं, मैत्र्याऽलं क्षुल्लकस्य तत्सुमते ॥ ॥ ७९ ॥

सर्वज्ञस्याप्यवरं विपन्नकापुरुषरक्षणं कृपया ।
कुट्टयतेऽग्नै पतितस्त्रातारं चापि वृश्चिकस्सुमते ॥ ॥ ८० ॥

प्राणा वैश्यः पुर्याः, प्राणाः कलमस्य वारि, कलभस्य ।
प्राणास्तु करो, लक्ष्म्याः प्राणास्सरसीजलोचना सुमते ॥ ॥ ८१ ॥

अप्रार्थितकर्मकृतिं विरसारतिमनृपवीक्षितां सेवाम् ।
स्त्रैणेयमनाह्वानं स्नेहं चानिच्छता त्यजेस्सुमते ॥ ॥ ८२ ॥

व्याघ्रीदुग्धं दद्यान्नयस्येत हृदयं विदार्य हस्ततले ।
दद्याच्चाशिखवित्तं गणिका प्रीणाति नैव हे सुमते ॥ ॥ ८३ ॥

पुत्रे हि जातमात्रे नो हर्षो जायते हि जनकस्य ।
तं दृष्ट्वा यदि शंसति जनः पिता मोदते तदा सुमते ॥ ॥ ८४ ॥

कान्तारेऽपि च निखिलानर्थान्विन्देत दत्तवान्पूर्वम् ।
किञ्चिदपि नैव लभते मेरोश्शिखरेप्यदत्तवान्सुमते ॥ ॥ ८५ ॥

वैरी यदि पार्श्वे स्याल्लेखनकुशलो भवेच्च यद्यधिपः ।
त्राता यदि पिशुनस्स्यान्नष्टा कायस्थजीविका सुमते ॥ ॥ ८६ ॥

माऽऽधीकुरु तपनीयं, माप्यवधावेस्समीकरङ्गतलात् ।
मा कुरु बालिशमैत्रीं मा भूरधमर्ण आपणे सुमते ॥ ॥ ८७ ॥

बलवन्मानी लभते न शुभमनेकैर्विवदमानः ।
किं बलवन्तं सर्पं घ्नन्ति न शोणाः पिपीलिकास्सुमते ॥ ॥ ८८ ॥

मण्डलपतिरपि नाना सचिवेन न शोभते हि सम्मुखतः ।
पर्वतनिभकायोऽपि च हस्तीव विना करेण हे सुमते ॥ ॥ ८९ ॥

मन्त्रिमतो राज्यं ननु तन्त्रेण सुरक्षितं भवेद्राज्ञः ।
मन्त्ररहितस्य न चलेद्यन्त्रं च्युतकीलकं यथा सुमते ॥ ॥ ९० ॥

अन्यानुरक्ततरुणीमनुसरति हि पल्लवो मतिभ्रष्टः ।
मार्जारपरिगृहीता पञ्जरकीरी [illegible]सुमते ॥ ॥ ९१ ॥

( सशेषम् )

ॐ

# स्यथावृत्तम्

## सभायाः जन्मदिनोत्सवः

एतद्वत्सरश्रावणकृष्णचतुर्दश्यां ५-९-६४ तिथौ सायं ६ घंटासमये सभायाः एकोनविंशजन्मदिनोत्सवः निर्वृत्तः। सर्वकारकलाशालाध्यक्ष्यः **श्रीमान् जि. यस्. यन्. आचार्यः** M. A, B. Ed., महोदयः आध्यक्ष्यमवहत्। नागरिकाः विद्यार्थिनः अधिकारिणश्च बहवः सभामलमकुर्वन्। **श्री तिरुवेङ्कटाचार्यः** प्रधानमन्त्री सभायाः उत्पत्तिं अभिवृद्धिं चैतावतीं यथाक्रमं न्यरूपयत्। कार्यनिर्वाहकवर्गसदस्यः **श्री मुनिरेड्डिमहोदयः** संस्कृताध्ययनावश्यकतां प्रचारे संभवतः संकटान् प्रजासहकारावश्यकतां च न्यवेदयत। अनन्तरमध्यक्षः स्वभाषणे संस्कृतस्यौन्नत्यं भारतेतरदेशेषु तस्य आदरं भारतीयानां अनादरं च सूचयित्वा तद्भाषायाः विस्मरणे महती हानिः आपतिष्यतीति तदर्थं भारतीयसंस्कृतिरक्षणार्थं एकतानिर्वाहार्थं च संस्कृताभ्यासः सर्वैः कर्तव्यः इति च प्रत्यपादयत्। अन्ते च अनल्पनिर्माणकार्यक्रमनिष्ठायाः एतत्सभायाः यावच्छक्यं साहाय्यमपि दापयिष्यमीति प्रत्यजानात्॥

## विनायकचतुर्थीमहोत्सवः

भाद्रपदशुक्लचतुर्थ्यां ९-९-६४ दिने सायं ६ घण्टसमये सभाभवने संस्कृतविद्यार्थिभिः श्री विनायकपूजा समारब्धा। बहवः उपाध्यायाः पितरः मित्राणि च तत्र समामिलन्। मृण्मयी विनायकमूर्तिः महती पुष्पादिभिरलंकृता पूजिता च। विद्यार्थिभिः स्तुतिश्लोकैः आन्ध्रपद्यस्तुतिभिः गीतैश्च स्वभक्तिर्निवेदिता। प्रसादप्रदानसन्तुष्टाश्च जनाः स्वगृहानगच्छन्॥



## परीक्षासमीक्षा

दक्षिणायनपरीक्षाः सेप्टंबर ५, ६, ७ तिथिषु बहुषु केन्द्रेषु निर्विघ्नं प्राचलन्। ४३९ अभ्यर्थिनश्च उपस्थिताः विविधपरीक्षासु। आन्ध्रद्रविडकर्नाटक-केरलांग्लहिन्दीभाषासु समाधायिनः उपातिष्ठन्। बंगभाषीयास्तु अनुपस्थिताः इति महत् खेदस्थानम्। एतेषु कैस्तवा महम्मदीयाश्च बहवस्सन्तीति अतीव प्रमोदस्थानम्॥

## उत्तरायणपरीक्षाः

१९६५ मार्चमासे ६, ७, ८ तिथिषु प्रचलिष्यन्तीति विज्ञापयामः॥



# एतत्सभायाः जातकम्

श्रीपार्थिवनामसंवत्सरश्रावणबहुलचतुर्दश्यां बुधवासरे (५–९–१९४५) प्रातः ९-३० घण्टासमये सभायाः स्वरूपनिर्माणम् आसीत्।

स्वस्ति श्रीपार्थिवनाम संवत्सरे श्रावणकृष्णचतुर्दश्यां बुधवासरे 28-50, मखा 58-14, शिव 31-15, शकु 28-50, दिवि 26-19, सिंहभुक्तिः 3-18, एतादृश्यां शुभतिथौ सूर्योदयादिघटीषु 9-10 (9-30 A. M.) वृश्चिकलग्ने तुला-नवांशे संस्कृतभाषाप्रचारिण्याः सभायाः उत्पत्तिः आसीत्।

वृश्चिकपरिमाणः 5-32, वृश्चिकगतम् 1-55, मखाद्यन्तम् 58-39, मखा-गतम् 9-35, मखाशेषः 49-04,

* जननकाले केतुदशापरिमाणः 70 संवत्सराः

तत्रः गर्भभुक्तिवत्सराः 11, मा 2, दि 25

शिष्टाः वत्सराः 58, मा 9, दि 05

* अस्याः संस्थात्वात् पुरुषायुषः दशगुणितं पूर्णायुरिति परिकल्प्य दशादिकानि गणितानि।

तत्कालग्रहसंपत्तिः —

| | | |
|---|---|---|
| रविः | पूर्वफल्गुन्याः | 2 |
| चन्द्रः | मघायाः | 1 |
| कुजः | मृगशिरसः | 4 |
| बुधः | मघायाः | 2 |
| गुरुः | उत्तरफल्गुन्याः | 4 |
| शुक्रः | पुष्यस्य | 4 |
| शनिः | पुनर्वसोः | 4 |
| राहुः | आर्द्रायाः | 2 |
| केतुः | मूलायाः | 4 |

| | | | |
|---|---|---|---|
| | | | कु रा |
| | राशिचक्रम् | | शु श |
| — | | | र च बु |
| के | ल | | गु |

| | | | |
|---|---|---|---|
| गु | च | बु | |
| | नवांशचक्रम् | | श के |
| रा | | | |
| | कु शु | ल | र |

| | | | | | | |
|---|---|---|---|---|---|---|
| 5—9—45 | प्रभृति | 10—3—50 | पर्यन्तं | केतुदशायां | शुक्रभुक्तिः | |
| 11—3—50 | ,, | 10—9—53 | ,, | ,, | रवि | ,, |
| 11—3—53 | ,, | 10—7—59 | ,, | ,, | चन्द्र | ,, |
| 11—7—59 | ,, | 10—8—63 | ,, | ,, | कुज | ,, |
| 11—8—63 | ,, | 10—2—74 | ,, | ,, | राहु | ,, |
| 11—2—74 | ,, | 10—6—83 | ,, | ,, | गुरु | ,, |
| 11—6—83 | ,, | 10—7—94 | ,, | ,, | शनि | ,, |
| 11—7—94 | ,, | 10—6—2004 | ,, | ,, | बुध | ,, |

1945 वत्सरे शुक्रभुक्तौ स्थापनं आसीत्। 1947 तस्यामेव भुक्तौ स्वस्थानात् चलित्वा चित्तूरमागतवती। 1948 तस्यामेव भुक्तौ रिजस्टरकर्मणा दृढीकृता आसीत्। 1959 वत्सरे कुजभुक्तौ गृहसंपादनं, 1960 काले प्रभुत्वादरप्राप्तिः गृहनिर्माणं च समजनि। पुनः तस्यामेव भुक्तौ 1962 काले गैर्वाण्याः पत्रिकायाः प्रारम्भः, 1968 काले पत्रिकाया प्रभुत्वादरश्च समवर्तत ॥

त्रिकालज्ञा दैवज्ञाः महानुभावाः अस्याः अभिवृद्धिविघ्नौ सूचयेयुरिति धिया इदं जातकमत्र प्रकाशितम् । मदीयसाहसः क्षन्तव्यः सहृदयप्रवरैः ॥

ति. कं. तिरुवेङ्कटाचार्यः.

## पाठशाला

गुंटूरस्थश्रीकन्यकापरमेश्वरीधर्मशालायां श्रीमता न्यायवेदान्तविदुषा नारायणमूर्तिमहाशयेन एतत्सभापरीक्षार्थं गीताप्रचारसमितिपरीक्षार्थं च बालाः बालिकाश्च पाठ्यन्ते प्रतिदिनं सायं प्रातश्च ॥

## विज्ञापनम्



विद्वद्वतंसाः विशेषतः अभ्यर्थ्यन्ते – इयं च गैर्वाणी प्रायशः बालकोपयोगिनी संकल्पिता । अतः प्रौढलेखानां पद्यलेखानां च पठने अवगाहने च ते असमर्था इति मनसि निधाय सरलाः अल्पशरीराः गद्यमया रोचकाः लेखाः प्रेषयेयुः । पद्यमयानां बृहत्प्रमाणानां अप्रकाशने विलंबेन प्रकाशने वा मा कुप्यन्तु सहृदयाः । कथाः, सम्भाषणानि, विमर्शाः, वैज्ञानिकविषयाः, प्रश्नोत्तराणि, चमत्कारिणोंशाः, अद्भुतांशाः, वार्ताः, एकांक्यः इत्येवमादयः सुलभाः अनुग्रहीतव्याः । बालैः बालिकाभिरपि लिखितानि तत्तन्नाम्ना प्रकाश्येरन् । विद्यार्थिनां रचनाशक्तिरपि अनया वर्धनीया ॥

इति

प्रकाशकः




सुतः — अम्ब, क्षुत् मां अतीव बाधते ।

माता — वत्स, तण्डुलापणस्य पुरतः श्रेण्यां तिष्ठ । तथा चेत् क्षुत् प्रशाम्येत् ।

  

गायकः — प्रभो, मद्गानं श्रवणेन आदर्तुं प्रार्थये ।

प्रभुः — अयि, इदानीं न समयः । आकाशवाण्याः प्रसाराः श्रोतव्याः । यदा तस्याः वाण्याः विरामः तदा आगच्छसि चेत् श्रोष्यामि ।

गायकः — तदा भवतः निद्रासमयो भवेत् ।

प्रभुः — सत्यं, तथापि त्वद्गानस्य न कोप्यन्तरायो भवेत् ।

  

फलविक्रयी- आम्रं आम्रम्, नारङ्गो नारङ्गः, दाडिमं दाडिमं, बदरी बदरी, द्राक्षा द्राक्षा ।

जनः — फलानि किं अम्लानि अथवा मधुराणि ?

फल — कीदृशानि भवदपेक्षितानि ?

जनः — एतानि कीदृशानीति पृच्छामि ।

फल — यादृशी भावना यत्र सिद्धिर्भवति तादृशी ।

  

यात्री – शाकटिक, धूमशकटस्थानकगमनाय कियत् शुल्कमपेक्षसे ?

शा – एकं रूप्यकम् ।

यात्री – कति जनान् उपवेशयसि ?

शा – चतुरः ।

यात्री – अहं एक एव । तस्मात्पादरूप्यकमेव खलु दातव्यम् ?

शा – आर्य, यदि तथा अवशिष्टजनलाभार्थं प्रतीक्षे ।

यात्री – विलम्बश्चेत् धूमशकटिका अतियास्यति ।

शा – तर्हि रूप्यकं देहि त्वमेव ।

यात्री – अहं न चतुरः । नटराजसेवायामेव (पादचारेणैव) यास्यामि ।

  

अध्वरः – अयि, हट्टे किमस्ति ?

हट्टी – लड्डुकाः, मोदकाः, वटाः, दधिवटाः, पकोडाः, अपूपाः, पूरीकाः, जहंगिरः, दोषाः, इडलीः, फेणिकाः खर्जकाः सन्ति । अपि च मुद्गान्नं, शर्करौदनं, आम्लौदनं, दध्योदनं च अस्ति । किमत्रावश्यकम् ? आज्ञापयतु भवान् ।

अध्वरः – न जाने भवद्धट्टे वस्तूनि कथं वा वर्तन्ते इति । तेषु एकैकमपि किंचित् किंचिदुपाहर । आस्वाद्य अभीष्टतमं आदेक्ष्यामि ।

हट्टी – भवदादेशानन्तरमेव अन्यतः एतानि आनेयानि । तत्कृपया रूप्यदशकं अर्पय प्रथमम् ।

  

माता – वत्से, मुखं किंचिदवनमय । अन्यथा निर्लज्जां त्वां मनुते वरः ।

वधूः – स एव निर्लज्जः । मद्वयस्यां माधुरीमेव अतिमात्रं पश्यति ।

माताः – लोकाचारमनुवर्तस्व ।

वधूः – किं तेन मूढाचारेण, चलचित्राचारं अनुवर्ते ।

  



भवनस्य पृष्ठभागः

अद्यापि शिथिलावस्थायां वर्तमानः दातॄणां हस्तावलम्बमपेक्षते ।



## आश्वासनम्

वाणीं भजत गैर्वाणीं जातां मासिकपत्रिकाम् ।
रूपकैर्विविधैश्चित्रैः गुंभितां सरलैः पदैः ॥

गैर्वाण्यनुसृता पूर्ववासनामद्य चागता ।
इतः परं यथाकालं मासिक्यैव समेधताम् ॥

वर्णसंयोजकाश्चास्याः सावधानाश्चिरं भुवि ।
मुद्रापकाश्च जीयासुः सर्वे मंगळकांक्षिणः ॥

पैत्तंबाडिनिवास्यद्य रामानुजयमहाकविः ।
गैर्वाणीं सततं भव्यां आशास्ते चिरजीविनीम् ॥



## Names of Subscribers for Gairvani.



| | | | |
|---|---|---|---|
| 179. | Narayanamurthy, Gunturu. | 4 | 00 |
| 180. | K. B. Nagarajasarma, Hindupur. | 4 | 00 |
| 181. | K. V. Somayajulu, Rajahmundry. | 4 | 00 |
| 182. | L. U. Maheswara Iyer, Madurai. | 4 | 00 |
| 183 | C. Krishnamurthy, Caddpah. | 10 | 00 |
| 184. | K Sivakesavulu, Atmakur. | 4 | 00 |
| 185. | P. V. Chalapathi Rao, Pamarru. | 4 | 00 |
| 186. | V. Gopalakrishnaiah, Hyderabad. | 4 | 00 |
| 187. | U. B. S. Samithi, Nellore. | 4 | 00 |



R N. 8145/60. Postal R. No H. 493.

अस्मत्सभायाः



प्रचारकमन्त्री

श्री नेति सुब्बरायशास्त्री



Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.